- Title – अज्ञात
- Accession No – Title –
- Accession No –
- Folio No/ Pages – 16/32 , 14 - 34
- Lines-
- Size
- Substance Paper –
- Script Devanagari
- Language – संस्कृत
- Period –
- Beginning – गर्भसुतायास्तुनार्याम सिद्धितीयके।
- End – सांध्येपारितनुत्वच्कारक कारोस्यधोगुणः स्नामुर्नभेदं।
- Colophon-
- Illustrations -
- Source -
- Subject - आयुर्वेद
- Revisor -
- Author -
- Remarks- आयुर्वेद सन्तानोत्पत्ति से सम्बन्धित है, अपूर्ण है,

Radha

त्र गर्भयुतायास्तु नार्या मासि द्वितीयके गर्भो गर्भाशये लब्धः पिंडाकारोऽपरं श्लक्ष्ण पिंडोव
र्तुलाकृतिः मासि द्वितीयक इत्यस्य गर्भः पिंडाकारो लब्धः इत्यनेनैवान्वयेन त्वग्रिम
कालेपि दक्षिणाक्षि महत्वं स्याः प्राक् क्षीरं दक्षिणे स्तने दक्षिणोरुः सुपुष्टः स्यात्तु स
न्नमुखवर्णता पुन्नामधेयद्रव्येषु स्वप्नेष्वपि मनोरथः आम्रादि फलमाप्नोति स्वप्ने
शुकमलानि च कन्या गर्भवती गर्भे पेशी मासि द्वितीयके अन्न गर्भस्य लिंगानि विपरी
तानि वेदलते पेशी दीर्घाकृतिम् नपुंसकं यदा गर्भे भवेद्गर्भोऽर्बुदाकृतिः उन्नतो भ
वतः पार्श्व पुरस्तादुदरं महत् अर्बुदं वर्तुलफलार्द्धतुल्यम् नपुंसक विशेषानाह
पित्रोस्तु स्वल्पवीजत्वादासेक्यः पुरुषो भवेत् स शुक्रं प्राश्य पलभते ध्वजोन्नतिमसं
शयं पित्रोर्मातापित्रोः स्वल्पवीजत्वात् स्वल्पशुक्रार्तवत्वात् आसेक्यः आसेक्य
आसेक्यश्च सुगंधी च कुंभीकश्चेर्ष्यकस्तथा अमी सशुक्रा वोद्धव्या अशुक्रः षंढसंज्ञकः
तेषां लक्षणमाह ४२

एवमार्त्तवमप्रवृत्तिनदोषः सुश्रुतं पुनराह वैलक्षण्याच्छरीराणामस्थायित्वात्तथैव च दोष
धातुमलानां तु परिमाणं न विद्यते वैलक्षण्यात् दीर्घह्रस्वस्थूलकृशादिभेदेन सादृश्या
भावात् अस्थायित्वात् वयोऽहर्निशात् भुक्ते चैकमात्रानवस्थानात् एवं तामभिसंगम्य पु
नर्मासाद्गमेदसो मासादूर्ध्वमिति शेषः अर्वाग्मासेन गर्भद्वारविघट्टनाच्छ्रुतिप्रसंगः
स्यात् केचित्पुनः ऋतुदर्शने गर्भालाभनिश्चये मासादूर्ध्वं गच्छेत् लब्धगर्भां तु नैव
गच्छेत् इति वदंति ॥ तत्रोहार्थपरिहारार्थं सद्योगृहीतगर्भाया लक्षणमाह शुक्रशो

यो४ णितं योनेरस्रावोऽथस्तब्धवोद्भवः सक्थिसादः पिपासा च ग्लानिः स्फुरणं भगे भवेत्
अयत्नस्याणवोनरकालिकलक्षणमाह ॥ स्तनयोर्मुखकार्ष्ण्यं स्यात् रोमराज्युद्गमस्तथा
अक्षिपक्ष्माणि चाप्यस्याः संमील्यंते विशेषतः छर्दयेत् पथ्यभुक्तापि गंधादुद्विजते
शुभात् प्रसेकः सदनं चैव गर्भिण्या लिंगमुच्यते तत्र पुत्रगर्भवत्या लक्षणमाह उ

घ

१५

योनिं वर्षेण करोति। अपराश्चापि गर्भप्रकृतीराह यदा नार्यावुपेयातां वृषस्यंत्यौ कथंचन॥
मुंचंत्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते अनस्थिः अस्थिषदूर्ये न जते न अल्पकोमलास्थि
रित्यर्थः ऋतुस्नाता तु या नारी स्वप्ने मैथुनमाचरेत् आर्त्तवं वायुरादाय कुक्षौ गर्भं करो
ति हि मासि मासि प्रवर्त्तेत स गर्भो गर्भलक्षणः कललं जायते तस्य वर्जितं पैत्रिकैर्गुणैः॥
गर्भलक्षणः प्रकृतिगर्भलक्षणान् पैत्रिकैर्गुणैः केशश्मश्रुलोमनखदंतशिरास्नायुध
मनीरेतः प्रभृतिभिः सर्पवृश्चिककूष्मांडाकृतयो विकृताश्च ये गर्भास्ते योषितस्ताश्च ये
याः पापकृतो भृशम् गर्भो वातप्रकोपेन दौहृदे चापमानिते भवेत्कुब्जः कुणिः पंगुर्मूको

रा= मिन्मिन एव च नाणमाहारचारचेष्टाभेदस्य हेतुमाह आहाराचारचेष्टाभिर्यादृशीभिः
समन्वितौ स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः समुपेयातां संयोगं गच्छेतां अथ ग
र्भलक्षणमाह गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकं प्रकृतिः सविकारा च तत्सर्वं गर्भसं

3

नामामुखयोनीतिनामांतरम् सःशुक्रंप्राश्येति सपुरुषोऽन्यपुरुषेणस्वमुखेमैथु
नंकारयित्वातस्यशुक्रंप्राश्यमेहनोत्थानंलभतइत्यर्थः सःपूर्तियोनौजायेतसहिसौ
गंधिकोभवेत् सयोनिशेफसोर्गंधमाघ्रायलभतेबलम् सौगंधिकःसौगंधिकना
मानासायोनीतिनामांतरम् बलंमैथुनेशक्तिं स्वगुदेब्रह्मचर्याद्यःस्त्रीपुंवत्प्रवर्तते
सकुंभीकइतिज्ञेयोगुदयोनिस्तुसस्मृतः अब्रह्मचर्यात् ब्रह्मचर्यममैथुनंअब्रह्मचर्यं
मैथुनंतस्मात् दृष्ट्वाव्ययायमन्येषांव्यवायेयःप्रवर्तते ईर्ष्यकःसतुविज्ञेयोदृष्टियोनि
स्ससस्मृतः योभार्यायामृतौमोहादंगनेवप्रवर्तते ततस्त्रीचेष्टिताकारोजायतेषंढसंज्ञ
कः स्त्रीचेष्टिताकारः अप्रकारःश्मश्रुरहितःस्त्रीचेष्टितःसमेहनोपिपुरुषशक्तिरहितः॥
किंतुस्त्रीवदधोभूतःस्वगुदेपुरुषांतरेणमैथुनंकारयति अतोअतोपुरुषवत्प्रवर्तेतां
गनायदि तत्रकंन्यायदिभवेत्साभवेन्नरचेष्टिता सापुरुषवत्स्त्रियमारुह्यतस्यायोनौस्व

त

स्तनौ गर्भवत्याः प्रसूतायास्तावेव क्षीरपूरितौ हृदयं पुंडरीकेन सदृशं स्यादधोमुखं जाग्रतस्त
द्विकसति स्वपतस्तु निमीलति आशयस्तज्जीवस्य चेतनास्थानमुत्तमं अतस्तस्मिंस्तमोव्याप्ते
प्राणिनः प्रस्वपंति हि चेतनास्थानमुत्तममिति अयमभिप्रायः चेतनानामधिष्ठानं मनो देह
श्च सेंद्रियः केशलोमनखाग्रान्नमलद्रवगुणैर्विना इत्युक्तं चरकेण सकलं शरीरं चेतनास्था
नमुक्तं तदपि तया हृदयं विशेषतश्चेतनास्थानमिति कृदयोर्वक्षसः संधौ जत्रुणी समुदाहृते॥
कक्षे उभे समाख्याते तयोः स्यातां च वंक्षणौ उदरं पंचमं चांगं षष्ठं पार्श्वद्वयं मतम् सपृष्ठकं
पृष्ठेन सममस्तं पंचमं स्मृतं उपांगानि च कथ्यंते तानि जानीहि यत्नतः शोणितात्जायते प्लीहा
वामतो हृदयादधः रक्तवाहिशिराणां स मूलं ख्यातो महर्षिभिः हृदयाद्वामतोऽधश्च फुप्फु
सो रक्तफेनजः अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः तत्तु रंजकपित्तस्य स्थानं शो
णितजं मतम् अधस्तु दक्षिणे भागे हृदयात्क्लोम तिष्ठति जलवाहिशिरामूलं तृष्णाच्छा

त्री=

स्तकं कालेन वर्द्धितो गर्भोपि ह्यंगोपांगसंयुतः भवेत्तदा स मुनिभिः शरीरीति निगद्यते अं
गोपांगसंयुतः व्यक्तोपांगः तस्यांगान्युपांगानि ज्ञात्वा सम्युत शास्त्रतः मस्तकादभिधीयं
ते शिष्याः शृणुत यत्नतः आद्यमंगं शिरः प्रोक्तं तदुपांगानि कुंतलाः तस्यांतर्मस्तुलुंगश्च
ते ललाटं भ्रूयुगं तथा नेत्रद्वयं तयोरंतर्वर्ति हि कनीनके दृष्टिद्वये कृष्णगोलो स्वेतभागो
खो= च वर्त्मनीयद्माण्यपांगो प्रोक्षोंचकर्णौ तच्छष्कुलीद्वयं पालीद्वयं कपोलो च नासिका च प्रकी
र्त्तिता ओष्ठाधरौ च सृक्किण्यौ मुखं तालु हनुद्वयं दंताश्च दंतवेष्टाश्च रसना चिबुकं गलः द्वि
तीयमंगं ग्रीवा तु पश्चान्मूर्द्धा विधार्यते तृतीयं बाहुयुगलं तस्यदुपांगान्यथ ब्रुवे तत्रोपरिम
तौ स्कंधौ प्रगंडौ भवतस्त्वधः कफोणियुग्मं तदधः प्रकोष्ठयुगलं तथा मणिबंधौ तलेहस्तौ
तयोश्चांगुलयो दश नखाश्च दश तेस्याप्यादशाष्टौ घां प्रकीर्त्तिताः चतुर्थमंगं वक्षस्तु तदुपा
गान्यथ ब्रुवे स्तनौ स्तनस्थानार्या विशेषउभयोश्यम् यौवनागमने नार्याः पीवरौ भवतः

२                क्ष्यx२



नितंबौ च योषितः तयोः ऊर्ध्वं स्यातां स[illegible]नी त्वंगमष्टमम् तद्रूपांगानि चत्वारो जानुनी पिंडिकाद्वयम्
जंघे द्वे घ्राणिके [illegible] पार्ष्णि तले च प्रपदे तथा पादांगुलयस्तत्र दश तासां नखा दश अयेदं शरी
धx रमपरेणापि येन येन समवायिकारणेनोच्यते तानि सर्वाण्याह अथ दोषाः प्रवक्ष्यंते धातवस्तदनं
तरम् आहारादिगतिस्तस्य परिणामश्च वक्ष्यते आर्तवं चाथ धातूनां मलास्तदुपधातवः आश
याश्च कलाश्चापि मर्माण्यथ च संधयः शिराश्च स्नायवो यश्चापि धमन्यः कंडरास्तथा रंध्राणि भू
रिस्रोतांसि जालैः कूर्चाश्च रज्जवः सेवन्यश्चाथ संघाताः सीमंताश्च तथा त्वचः लोमानि लोमकू
पाश्च देहएतन्मयो मतः तत्र दोषस्वरूपमाह वाग्भटः वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः
विकृताविकृता देहं घ्नंति ते वर्द्धयंति च ते व्यापिनोपि हृन्नाभ्योरधो मध्योर्द्ध्वसंश्रयाः वयोहोरा
त्रिभुक्तानां ते तामध्यादिगाः क्रमात् दोषशब्दस्य तु निरुक्तिमाह धातवश्च मलाश्चापि दुष्यंत्ये
भिर्यतस्ततः वातपित्तकफा एते त्रयो दोषा इति स्मृताः दोषा इत्यत्र इषवैकृत्ये ० इति दु[illegible]धा

५४२

दनकृत्स्नं लोमतिलकं एतत्सुवातरक्तजम् तथा चवृद्धवाग्भट्टः रक्तादनिलसंयुक्तात्काली

कलेजीः यकसमुद्भवेत्ति मेदःशोणितयोःसाराद्वृक्कयोर्युगलं भवेत् तौतुपुष्टिकरौप्रोक्तौजठरस्य

स्थमेधसः उक्ताःसार्द्धास्त्रयोव्यामाःपुंसामंत्राणिसूरिभिः अर्द्धव्यामेनहीनानियोषितोंत्रा

णिनिर्दिशेत् उदकस्यचकटीवापित्रिकंवस्तिश्चवदंतणो कंडराणांप्ररोहंस्यात्स्थानंवावीर्य

मूत्रयोःसएवगर्भस्याधानंकुर्याद्गर्भाशयेस्त्रियाःशंखनाभ्याकृतिर्योनिस्त्र्यावर्त्तासाप्रकीर्ति

ता तस्यास्तृतीयेत्वावर्त्ते गर्भशय्याप्रतिष्ठिता वृषणौभवतःसारात्कफासृग्मांसमेदसाम्

वीर्यवाहिशिराधारौतौमतौपुरुषस्यहि गुदस्यमानं सर्वस्यसार्द्धंस्याच्चतुरंगुलं तत्रस्युर्व

लयस्तिस्रःशं(खा)वर्त्तनिभास्ततः प्रवाहिणीभवत्यादौसार्द्धांगुलमितामता उत्सर्जनीतुत

दधःसासार्द्धांगुलसंमिता तस्याअधःसंवरणी स्यादेकांगुलसंमिता अर्द्धांगुलप्रमाणंतु

उदौष्ठदरुंमतम् मलोत्सर्गस्यमार्गोयःपायुर्देहेविनिर्मितः पुंसःप्रोक्तोस्यसत्तोयोतत्तो

रव

दे४

नामस्थानकर्मभेदैः पंचविधः तेषां वायूनां नामान्याह उदानस्तदनु प्राणः समानोऽ
पान एव च व्यानश्चैतानि नामानि वायोः स्थानप्रभेदतः अथोदानानां स्थानान्याह कण्ठे
हृदि तथाऽधस्तात्कोष्ठवह्नौ मेलाश्रये सकलेपि शरीरे सो क्रमेण पवनो वसेत् अथ
तेषां कर्माण्याह उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः तेन भाषितगीतादि प्रवृत्तिः कु
पितस्तु सः ऊर्द्ध्वजत्रुगतान् रोगान्विदधाति विशेषतः ॥ यो वायुः प्राणनामासो मुखं गच्छति
देहधृक् सोन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलंबते प्रायशः कुरुते दुष्टो हिक्काश्वासो
दितान् गदान् आमपक्वाशयचरः समानो वह्निसंगतः सोन्नं पचति तज्जांश्च विशेषा
न्विविनक्ति हि तज्जानित्यादि अन्नजान् रसमलमूत्रादीन् पृथक् करोतीत्यर्थः स दुष्टो व
ह्निमांद्यातिसारगुल्मान्करोति हि पक्वाशयालयोपानः काले कर्षति चाप्ययं समीरणः
कृशन्मूत्रं शुक्रगर्भार्तवान्यधः कुद्धस्तु कुरुते रोगान् घोरान्बस्तिगुदाश्रयान् शुक्रदोष

9

दुष्यन्त एते एभिरितिवाक्ये अकर्मेति चकारके संज्ञायामित्यनेन सूत्रेण करणेऽर्थे घञ् प्रत्ययः ५१

10

तोः ते धातवोऽपि विवृद्धिर्गेहिता देहधारणात् यत आह सुश्रुतः विसर्गादानविक्षेपैः सोम
सूर्यानिला यथा धारयन्ति जगद्देहं कफपित्तानिलास्तथेति अत्र यथासंख्येनान्वयो
बोद्धव्यः विसर्गादानवत्सेयं विक्षेपः शीतोष्णादीनां विविध प्रकारेण प्रेरणम् मलाश्च
तेरसादीनां मलिनीकरणान्मताः तत्र शयोः स्वरूपमाह दोषधातुमलादीनां नेताशीघ्रः
समीरणः रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघुश्चलः नेतास्थानांतरं प्रापयिताशीघ्रः
आशुकारी अन्यच्च उत्साहोच्छ्वासनिःश्वासचेष्टावेगप्रवर्तनैः सम्यग्गत्याच धातूनामिं
द्रियाणां च पाटवेः अनुग्रहणात्यविकृतो हृदयेंद्रियचित्तधृक् रजोगुणमयः सूक्ष्मः शी
तो रूक्षो लघुश्चलः खरोमृदुर्योगवाही संयोगादुभयार्थकृत् दाहकृत्तेजसायुक्तः शीत
कृत्सोमसंश्रयात् विभागकरणाद्वायुः प्रधानो दोषसंग्रहे पक्वाशयकटीवस्तिश्रो
तोऽस्थिः स्पर्शनेंद्रियम् स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः एकोवायुः पित्तवत्॥

प्राणनं
ग्रहणं व
लस्येव ४३

र्यं

मूत्रपुरीषाणि विरेचयतीति त्यर्थः पाचकं पित्तं नाम पक्वाशयमध्यस्थं चतुर्विधमाहारं भोज्यं
भक्ष्यं चलेह्यं चोष्यं पेयं पचति दोषरसमूत्रपुरीषाणि पृथक्करोति च तदग्न्याशयस्थमेवात्म
शक्त्या रसरंजनहृदयस्य कफतमोपमोदनरूपग्रहणप्रभाप्रकाशनाभ्यंगलेपादि पाचना
द्यग्निकर्मणां शेषाणां पित्तस्थानानामनुग्रहं करोति शेषाण्यपि पित्तस्थानानि यकृत्प्लीहादी
निभागेन गत्वा तत्र तत्र संरंजनादिकर्म निरूपं करोतीत्यर्थः कथंभूतं पाचकं पित्तं शेषाग्नि
बलवर्द्धनम् शेषाग्नयः पृथिव्यादिमहाभूतगुणाः यदुक्तं चरकेण भौमाप्याग्नेयवाय
व्याः पंचोष्माणः सनाभसाः इति उष्माणः अग्नयः यदुक्तं वाग्भटेन दोषधातुमलादी
नां सूक्ष्मेत्याश्रयशासनमिति दोषधातुमलादीनां सूक्ष्मो वाग्निरित्यर्थः रसादिधातुगताश्च
सप्त तेषां बलवर्द्धनम् यथागृहे स्थापितानि खद्योतवदहूरभास्वराणि तान्यपि दीपज्योति
षा दूरप्रकाशकानि भवंति तथा अग्न्याशयस्य पावकाग्नितेजसा सर्वे अग्नयो बलवे

प्रमेहांश्च व्यानापानप्रकोपजान् कुर्व्वन् देहचरो व्यानो रससंवहनोद्यतः स्वेदासृक्स्रावणश्चापि पंचधा चेष्टयत्यपि गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः प्रायः सर्वाः स्तस्मिन्प्रतिबद्धाः शरीरिणां प्रस्यंदनञ्चोद्वहनं पूरणं च विरेचनं धारणं चेति पंच चेष्टाः प्रोक्ता नभस्वतः क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् युगपत्कुपिता एते देहं भिंद्युः संशयं देहं भिन्नं कुर्युर्मारयेयुरित्यर्थः अथ पित्तस्य स्वरूपमाह पित्तमुष्णं द्रवं पीतं नीलं सत्वगुणोत्तरम् क्षारं कटु स्निग्धं लघु तीक्ष्णं मम्लं तु पाकतः पीतं निरामम् नीलं स्यामम् एवं पित्तवात्तवन्नामस्थानकर्मभेदैः पंचविधम् तेषां पित्तानां नामान्याह अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये त्वचि सर्वशरीरस्य पाचकं रंजकं चापि साधकालोचके तथा भ्राजकं चेति पित्तस्य नामानि स्थानभेदतः अथ पाचकादीनां स्थानान्याह अग्न्याशये यकृत्प्लीह्नोर्हृदये लोचनद्वये त्वचि सर्वशरीरस्य पित्तं निवसति क्रमात् अथ तेषां कर्माण्याह पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम् रस

योगप्रदीपे तत्रतन्त्रान्तरप्रमितिरिति=२ 13

२

मदोषः समाग्निश्चेत्यपि वक्तुं न युज्यते तथा द्रवस्निग्धमधोगं च पित्तं वह्निरतोन्यथा अ
त्रोच्यते पित्तमग्निः सततमधिष्ठाने तथा चोक्तं तन्त्रान्तरे अग्निर्भिन्नगुणोयुक्तः पित्तं भिन्न
गुणोस्तथा द्रवं स्निग्धमधोगं च पित्तं वह्निरतोन्यथा तस्मात्तेजोमयं पित्तं पित्तोष्मापः स शक्ति
मान् स संचरति कुक्षिस्थः सर्वतो धमनीभिः सकायाग्निः सकायोष्मा सपक्ता स च जीवनं अ
नन्यगतिरित्येवं देहे कायाग्निरुच्यते अन्यच्च वामपार्श्वस्थितं नाभेः किंचित्सोमस्य मंडलं तन्म
ध्ये मंडले सोप्यं तन्मध्येग्निर्व्यवस्थितः जरायुमात्रप्रछन्नः काचकोशस्य दीपवत् तथा च म

तेजः धुकोषोद्भवं द्रवं समुदायात्मकस्य पित्तस्य तेजो भागोऽग्निरिति तेन पित्तभवोप्यग्निरिवम रितितेना पित्तमप्य ग्निx४
न्यते अग्निनापित्तयोर्गोलकवत् परमार्थं तत्तु अग्निः पित्ताद्भिन्न एवेति सिद्धांतः अत एवा
हरसप्रदीपे जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः सोक्ष्म्याद्रसानाददानो विवेक्तुं ने
व शक्यते नाभौ मध्ये शरीरस्य विशेषात्सोममंडले सोममंडलमध्यस्थं विद्यात्सूर्यस्य मंड

२

14

तोभवति तथाचवाग्भटः अन्नस्य पक्ता सर्वेषां पक्तॄणामधिपो मतः तन्मूलास्ते हि तद्वृद्धि
क्षयवृद्धिक्षयात्मका इति ननु पित्तादन्योग्निराहोस्वित् पित्तमेवाग्निरिति संदेह उच्यते पित्त
१४२ स्योष्मादिगुणद्वाराहारपाचनरंजनदर्शनादिकर्मस्वंशेषु पित्तव्यतिरेकेणान्योऽग्निः तस्मा
दग्निरूपस्यैव पित्तस्य स्थानभेदात् पाचकरंजकसाधकालोचकभ्राजकसंज्ञाः तथाचवाग्भटः ॥१
पाचकं तिलमानं स्यात्काहिन्या चास्य दोषता अनुग्रहणात्तत्र विकृतं पित्तं पाकोऽस्य दर्शनम् ॥
६ दुक्तं रुचिप्रभामेधाधीशौर्यतनुमार्दवैः पित्तं पंचात्मकं तत्र पक्वामाशयमध्यगम् पंचभूतात्म
५४ कत्वेपि यत्तैजसगुणोत्तरम् त्यक्तद्रवत्वं पाकादिकर्मणानलशब्दितम् पचत्यन्नं विभजते
सारकिट्टौ पृथक्तथा तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहं करोति बलदानेन पाचकं नाम तत
स्मृतम् ननु यदि पित्ताग्न्योरभेदस्तदा कथं घृतं पित्तस्य शामकमग्नेर्दीपनमिति तथा मत्स्याः
पित्तं कुर्वंति न च तेग्निदीप्तिकरा इति तथा पित्ताधिक्यातीदग्धाग्निरित्यपि कथं स्यात् तथास

पं ३४×२ 15

ष्याणां श्लेष्मा तिष्ठत्यनुक्रमात् दोषाणां सकलशरीरव्यापिनामपि पंच स्थानानीति वा
उत्याभिप्रायेणोक्तानि तथा च वाग्भटः इति प्रायेण दोषाणां स्थानान्येविकृतानामू
व्यापिनामपि जानीयात्कर्माणि च पृथक्पृथक् इति चरकस्त्र ते व्यापिनोपि हृन्नाभ्योरधो
मध्योर्ध्वसंश्रयाः इति अथ तत्स्थानगतस्य श्लेष्मणः कर्माण्याह क्लेदनः क्लेदयत्यन्नमा
त्मशक्त्या पराण्यपि अनुगृह्णाति च श्लेष्मस्थानान्युदककर्मणा अयमर्थः क्लेदनोन्नं
क्लेदयति तेन संहतमन्नं भेदं प्राप्नोति अपराण्यपि श्लेष्मस्थानानि हृदयादीनि भागेन
गत्वा तत्र तत्र हृदयावलंबनसाधारणासंग्रहणसमस्तेन्द्रियतर्पणसंधिसंश्लेषणा
घुदककर्मभिः अनुगृह्णाति उपकरोति तथा च रसयुक्तात्मवीर्येण हृदयस्यावलं
बनं त्रिकसंधारणं चापि विदधात्यवलंबनः त्रिकं शिरोबाहुद्वयसंधिः उभावपि यतः
सौम्यौ तिष्ठतस्त्रिके यतः यतो रसान्विजानीते रसनारसनोसमो रसनारसनेन्द्रि

ह्रस्वकायेषु सत्वेषु तिलमात्रप्रमाणतः ×४

लं प्रदीपवत्तत्र नराणां स्थितो मध्ये कृशानुः सूर्यो दिवि यथा तिष्ठंस्तेजो युक्तो गभस्तिभिः वि
शोषयति सर्वाणि पल्वलानि सरांसि च तद्वच्छरीरिणां भुक्तं ज्वलनो नाभिमाश्रितः मयूखैः
पच्यते क्षिप्रं नानाव्यंजनसंस्कृतम् स्थूलकायेषु सत्वेषु यवमात्रप्रमाणतः कृमिकीटपतं
गेषु वालमात्रोऽवतिष्ठत इति ७ अतः प्रकृतमनुसरति रंजकं नाम यत्पित्तं तद्रसं शोणि
तं नयेत् यत्तु साधकसंज्ञं तत् कुर्याद्बुद्धिधृतिस्मृतिं धृतिमेधाम् यदालोचकसंज्ञं तद्रू
पग्रहणकारकम् भ्राजकं कांतिकारि स्याल्लेपाभ्यंगादिपाचकम् अथ श्लेष्मणः स्वरूप
माह श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा तमोगुणाधिकः स्वादुर्विदग्धो लव
णो भवेत् एकः श्लेष्माप्यातपित्तवच्च नामस्थानकर्मभेदैः पंचविधः तेषां श्लेष्मणां नामान्या
ह कफस्यैतानि नामानि क्लेदनश्चावलेबनः रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः
अथ क्लेदनादीनां स्थानान्याह आमाशये च हृदये कंठे शिरसि संधिषु स्थानेष्वेषु मनु

स्थानमाह सर्वदेहचरस्यापि रसस्य हृदयस्थलम् समानम[रु inserted above]तात्पूर्वं यदयं हृ
दये स्थितः अथ रसस्य कर्माण्याह आहृत्य धमनीर्गत्वा धातून्सर्वान्नयेद्रसः पु
ष्णाति तदनु स्वीयैर्व्याप्नोति तत्र च गुणैः शीतस्निग्धपोषकत्वैः मंदवह्निविदग्ध
स्तु कटुर्वाम्लो भवेद्रसः स कुर्याद्बहुलान्रोगान्विषकृत्यं करोत्यपि अथ रक्तस्य स्व
रूपमाह यदा रसो यकृद्याति तत्र रंजकपित्ततः रागं पाकं च संप्राप्य स भवेद्रक्तसं
ज्ञकः रक्तं सर्वशरीरस्य जीवस्याधार उत्तमः स्निग्धं गुरु चलं स्वादु विदग्धं पि
त्तवद्भवेत् जीवस्याधार उत्तम इति यत्राह जीवो वसति सर्वस्मिन्देहे तत्र
विशेषतः वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात् इति वीर्ये रक्ते मले
च शरीरारंभके वाग्भटोक्तपरिमाणमिति शुद्धे जीवो वसति न तु दुष्टे प्रवृद्धे

पे रसनः केहस्थः कफः स्नेहनात्स्नेहदानेन समस्तेंद्रियतर्पणः श्लेष्मणः सर्वसंधीनां स
श्लेषविद्धात्यसौ ॥ अथ दोषप्रसंगात् दूष्यानप्याह ॥ ते दोषा धातवः सप्त तन्मला उप
धातवः मलमूत्रं च गर्भाद्याउ द्ये दूष्या उदाहृताः ॥ अथ धातुशब्दस्य निरुक्तिमाह एते स
प्त स्वयं स्थित्वा देहं दधति यन्नृणां रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः धातवः इ
त्यत्र धा धातोस्तुन् प्रत्ययः ॥ अथ धातूनां कर्माण्याह प्रीणनं जीवनं लेपः स्नेहो धारणपू
रणे गर्भोत्पादश्च कर्माणि धातूनां कथितानि हि तत्र रसशब्दस्य निरुक्तिः अत्यर्थो रस
धातुर्यस्ततो भवेदयं रसः सदैव सकलं देहं रसतीति रसः स्मृतः ॥ अथ रसस्य स्वरूपमा
ह सम्यक्पक्वस्य भक्तस्य सारो निगदितो रसः स तु द्रवः सितः शीतः स्वादुः स्निग्धश्चलो
भवेत् सारो यथा गुरु मधूक ७ ष्यस्फूल त्वग्बदरीमूलादिभवसारो मदे रा ॥ अथ रसस्य

पादाग्रे १५ पादोपरि कूर्च्चसन्निविष्टा दश १० गुल्फतलयोर्द्दश १० गुल्फजान्वन्तरे विं
शतिः २० जानुनि पंच ५ ऊरौ विंशतिः २० वंक्षणे दश १० एवमेकस्मिन् सक्थ्नि शतं भव
ति॥ एतेनेतरसक्थि बाहू च व्याख्यातौ अथ कोष्ठगताः प्राह गुदे तिस्रः ३ शेफस्येका १
सेवन्यामेका १ वृषणयोर्द्वे २ स्फिजोः पंच पंच ५५ बस्तिमूर्द्ध्नि द्वे २ उदरे पंच ५ ना
भ्यामेका १ पृष्ठोर्द्ध्वसन्निविष्टा उभयतः पंच पंच दीर्घाः ५५ पार्श्वयोः षट् ६ वक्षसि
दश १० अक्षकांसौ प्रति समन्तात्सप्त ७ अक्षकौ आखु आ इति लोके॥ अंसौ स्कंधौ
हृदि द्वे २ यकृति द्वे २ प्लीह्नि द्वे २ उन्दुके २ अथ ग्रीवोर्द्ध्वगाः प्राह ग्रीवायां चतस्रः
४ हन्वोरष्टौ ८ कंठमणौ घंटिकायामिति यावत् गले एका १ तालुनि द्वे २ जिह्वायामे
का १ ओष्ठयोर्द्वे २ ललाटे चतस्रः ४ शिरस्येका १ एवं मांसपेश्यः पंचशतानि भवं

६४२

रक्तस्यावर्णोपदेशास्यवैयर्थ्यप्रसंगात् पित्तवद्भवेत् अपक्वंभवेदित्यर्थः अथर
क्तस्यस्थानमाह यकृत्प्लीहाचरक्तस्यमुख्यस्थानंतयोः स्मृतम् अन्यत्रापिस्थि
तंवातरक्तंनायोषकंभवेत् अथमांसस्वरूपमाह शोणितंस्वाग्निनापक्वंवायुना
चघनीकृतम् तदेवमांसंजानीयात्तस्यभेदानपिब्रुवे शोणितमिति शोणितस्यान
गतत्वाद्रसएवशोणितसंज्ञांलभते एवमग्रेरसस्येवमांसादिव्यपदेशः अथमां
सस्यपेशीराह यथार्थंसूक्ष्मरूपेणयुक्तोवायुःस्रोतांसिदारयेत् अनुप्रविश्यपिशितं
पेशीर्विभजतेतया यथार्थंयथाप्रयोजनं मांसपेशीनांसंख्यामाह मांसपेश्यःस
माख्याताःनृणांपंचशतानिहि तासांशतानिचत्वारि शाखासुकथितान्यथ कोष्ठे
षडुत्तराषष्टिः६६ कथितामुनिपुंगवैः ग्रीवायाऊर्ध्वगास्तासुचतस्त्रिंशत्प्रकीर्ति
ताः ताःशाखागताःमाह ।। एकैकस्यांतुपादांगुल्यांतिस्रस्तिस्रस्ताःपंचदश १५ ।।

त्रै।४२ 21

२४ हीयंते स्त्रीणां शोफसिमुष्कयोः अथ मांसपेशीनां कर्माण्याह शिरास्नाय्वस्थिपर्वाणि
संधयश्च शरीरिणां पेशीभिः संवृतान्येव बलवंति भवंति हि ॥ अथ मेदसः स्वरूपमा
ह ॥ यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते तदतीव गुरु स्निग्धं बलकार्यति बृंहणम्
अथ मेदसः स्थानमाह मेदो हि सर्वभूतानामुदरे ष्वस्थिषु स्थितम् अत एवोदरे वृद्धिः
प्रायो मेदस्विनो भवेत् अथास्थ्नां स्वरूपमाह मेदो यत्स्वाग्निना पक्वं वायुना चातिशो
षितम् तदस्थिसंज्ञां लभते स सारः सर्वविग्रहे अभ्यन्तरगतैः सारैर्यथा तिष्ठंति भूरु
हाः अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम् तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरी
रिणां अस्थीनि न विनश्यंति साराण्येतानि सर्वदा अथास्थ्नां संख्यामाह शल्यतंत्रेऽस्थि
खंडानां शतत्रयमुदाहृतम् तान्येवात्र निगद्यंते तेषां स्थानानि यानि च सविंशोंशतत्र
ति

22

स्त्रीणामपि भवंत्येताः किंतु विंशतिरुत्तराः गर्भाशये गर्भमार्गे योनौ च स्तनयोरपि ए
ताः पंचदश तास्विमा मांसपेश्यः अधिका विंशतिर्यया गर्भाशये तिस्रः गर्भच्छिद्रसंश्रि
ताः शुक्रार्त्तवप्रवेशिन्यस्तिस्रः २ योनावभ्यंतरेत्तोमुखाश्रिते प्रसते द्वे २ योनावेव
हिर्निर्गमे स्रोतः पार्श्वद्वयाश्रिते वर्त्तुले योनिकर्णिके इति यावत् द्वे स्तनयोः पंच
पंच यौवने तासां वृद्धिर्भवति ५।५। पुंसां [illegible] पेश्यः पु
ंस्त्वाद्याः प्रोक्ता मेहनमुष्कजाः स्त्रीणां प्रावृत्य तिष्ठंति फलमंतर्गतं हिताः अस्याय
मर्थः पुंसां मेहने मुष्कयोश्च यास्तिस्रो मांसपेश्यः पूर्वमुक्ताः स्त्रीणां मेहनमुष्का
भावात्फलं गर्भाशयमावृत्य तिष्ठंति गयदासस्त्वाह स्त्रीणां मांसपेश्यस्त्रिभिर्ही
नानि पंचशतानि ॥ तथा च भोजः पंचपेशीशतान्येव जीवे विद्धि नृणामिय अतस्त्रते

२×३

स्त्रीव×१

धिक्यात् कांश्चित्स्वगुणाधिक्यात् कांश्चित्स्वप्रभावगुणाधिक्यात् तत्र संकल्पपादलेपवृं
श्लिष्टकांतास्पर्शादयः स्वप्रभावाधिक्यात् शुक्रं विरेचयंति घृतक्षीरादयः स्वगुणाधिक्यात्
स्निग्धाधिक्यात् माषादयः स्वभावस्निग्धत्वादिगुणाधिक्यात् वाजीकरणे इति बहुवच
नमाद्ययोनुवर्त्तनम् तेनवल्यं वृंहणं जीवनीयगुणादयो बोद्धव्याः विरेचयंति प्रभावगुणा
धु x धिक्याच्छीघ्रमेव रसास्वादनपूर्वकं शुक्रं जनयित्वा प्रवर्त्तयंति यत आह दुग्धं माषाश्च
भल्लातफलमज्जामलानि च जनकानि निगद्यंते रेचकानि च रेतसः ननु बालानां कथं शु
क्रं न दृश्यते इत्याह बालानां शुक्रमस्त्येव किंतु सोद्व्यान्न दृश्यते पुष्पाणां मुकुले गंधो
यथासन्नपिनाप्यते तेषां तदेव तारुण्ये पुष्ट्वा व्यक्तिमेति हि कुसुमानां प्रफुल्लानां गंधः
प्रादुर्भवेद्यथा रोमराज्यादयः उ सा नारीणामपि यौवने जायते तत्र यो भेदस्तेयोप्याख्या
तत्रः सच व्याख्यानं च यथा उ सा रोमराजीश्मश्रुप्रभृतयः नारीणां तु रोमराजीस्तन्यार्तव
प्रभृतयः ननु प्रचुरः सो रसस्य धातुवृद्धिं कथं न करोतीत्याह वार्द्धके वर्द्धमानेन वापुना

स्थि×४ प्र×:

न्यायेनसर्वान्नधातून्स्वस्वेनमासेननवदंडोत्तरेणशुक्रमार्तवंचभवतीतिसिद्धांतः एवंरसा

द्रक्तमितिसंगतमेव ततोमांसम् ततोरक्तोत्पत्तेरनंतरंमांसंजायतेरसादेवेत्यर्थः मांसा

न्मेदः प्रजायतइति· मांसादनंतरंमेदःप्रजायतेरसादेवेत्यर्थः मेदसोऽस्थि· मेदसोऽग्रेऽस्थि

जायतेरसादेवेत्यर्थः एवंततोमज्जामज्जाग्रेशुक्रस्यसंभवइत्यर्थः रसःशरीरेत्रिधासं

चरति तथाचोक्तम् रसःशरीरेशब्दार्चिर्जलसंतानवत्त्रिधा संचरत्यनुरूपोऽयंनित्यमे

वहिदेहिनाम् अस्यायमभिप्रायः पुरुषास्तीक्ष्णाग्नयोमध्यमाग्नयोमंदाग्नयश्चभवंति॥

तत्रतीक्ष्णाग्नीनांरसःशरीरेशब्दसंतानवत् शीघ्रंसंचरति मध्यमाग्नीनामर्चिःसंतानव

न्मध्यवेगेनसंचरति मंदाग्नीनांजलसंतानवन्मंदंसंचरति तेनमासेनरसःशुक्रंभवतीति

यदुक्तं तन्मध्यमाग्नीनधिकृत्योक्तम् दीप्ताग्नीनांतुरसः किंचिन्न्यूनेनमासेनशुक्रंभवति·

मंदाग्नेः किंचिदधिकेनमासेनेतिसिद्धांतः तर्हिवाजीकरणीनामौषधीनांकिंप्रयोजनमि

त्याह वाजीकरण्यौषध्यः याभिरोषधीभिःपुरुषःशुक्राधिक्यात्स्त्रीषुवाजिवत्साम

र्थ्यमाप्नोतिइतिताःवाजीकरण्यः स्वंभावगुणोच्छ्रयात् तत्रकाश्चिद्दोषघ्न्यःस्वप्रभावा·

प्र स्वंभावगुणोच्छ्रयात् विरेचयंति नाः शुक्रं विरेचि

इत्यर्थं वाजीकरणः २

वदं×२

24

रेभ×२ २

युसुरतरूपेव्यायामं कुर्वतः अन्यच्च शुक्रं कामे न कामिन्यादर्शनात्स्पर्शनादपि शब्दसंश्रव
णाच्चुम्बनात्संभोगाच्च प्रवर्तते अथार्तवस्य स्वरूपमाह स्त्रीणां रसएव मासेनार्तवं भवतीत्युक्तं पुनरा
ह सुश्रुतः रसादेव र[illegible]जः स्त्रीणां मासि मासि त्र्यहं स्रवेत् तद्वर्षाद्द्वादशादूर्ध्वं याति पंचाशतः
क्षयम् मासेनोपचितं काले धमनीभ्यां तदार्तवम् ईषद्विवर्णं कृष्णं च वायुर्योनिमुखं नयेत् ग
र्भग्रहणयोग्यस्यार्तवस्य लक्षणमाह ॥ शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् तदार्तवं प्र
शंसन्ति यद्वासो न विरंजयेत् आर्तवस्य वर्णद्वयाभिधानं वातादि[illegible]प्रकृतिभेदेन
वर्णभेदात् यद्वासो न विरंजयेदिति यद्वासो लग्नं प्रक्षालितं सद्वाससः त्यजन्ति न तु विकृतत्वं कु
र्यात् ऋतुः स्त्रीणां रजोदर्शनात्षोडश निशास्तत्र भवमार्तवम् गृहीतगर्भाणां स्त्रीणामार्तव व
हानां स्रोतसां गर्भेणावरोधादार्तवं न स्रवति किंतु तदेवाधः प्रतिहतमूर्ध्वमागतमुपचीयमान
मपरा भवति अपरा आवर इति लोके । शेषं चोर्ध्वतरमागतं पयोधरौ याति । तस्माद्गर्भिण्याः
पीनोन्नतपयोधरा भवंति अथ धातुभ्यो ऽतिरिक्तानुगुणानाह अतिरिक्तगुणा रक्ते वृद्धे मांसेव

रसस्योत्पन्नत्वात् ततो धातुवृद्धिः स्यात्तस्मात्तन्नानिर्लज्जयेत् अथ शुक्रस्य स्वरूपमाह शुक्रं सौम्यं
सितं स्निग्धं बलपुष्टिकरं स्मृतम् गर्भबीजं वपुःसारो जीवस्याश्रय उत्तमः जीवस्याश्रय उत्तमं इ
ति यतश्चाह जीवो वसति सर्वस्मिन् देहे तत्र विशेषतः वीर्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं
क्षणात् अथ गर्भसंजननयोग्यस्य तस्य लक्षणमाह स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगंधि
च शुक्रमिच्छंति केचित्तु तैलक्षौद्रनिभं च यत् अथ शुक्रस्य स्थानमाह यथा पयसि सर्पि
र्गूढश्चेक्षौ रसो यथा एवं हि सकले काये शुक्रं तिष्ठति देहिनाम् अत्र सर्पिर्दृष्टांतो बहुयत्ने
न सिद्धत्वमथनेन सर्पिःशुक्रयोर्लाभात् अथ शुक्रस्य क्षरणमार्गमाह द्व्यंगुले दक्षिणे पा
र्श्वे बस्तिद्वारस्य चाप्यधः मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्तते वृद्धवाग्भटोप्याह सप्तमी
शुक्रधरा द्व्यंगुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधो मूत्रमार्गमाश्रिता सकलशरीरव्या
पिनी शुक्रं प्रवर्तयतीति सप्तमी कला अथ शुक्रस्य क्षरणकारणमाह हृष्टस्य देहस्थितं
शुक्रं प्रसन्नमनसस्तथा स्त्रीषु व्यायच्छतश्चापि हर्षात्तत्संप्रवर्तते स्त्रीषु व्यायच्छतः स्त्री
[illegible]

माशयाममलमूत्रयोः पुरुषेभ्योधिकास्त्र्यान्येनारीणामाशयास्त्रयः धरागर्भाशयः प्रोक्तः पित्तपक्वा ×२×

शयानुक्रमस्तुवाग्भटेनोक्तः सयथा रक्तस्याधः क्रमात्परे कफामपित्तवातानां आशयांतरे स्तनेऽस्र

सिद्धोनाविव बुधैः स्तन्याशयौ मतो अथ कलास्वरूपमाह स्नायुभिस्तु प्रतिछन्नान्संततांश्च जरा

युणा श्लेष्मणावेष्टितांश्चापि कलाभागांस्तुतान्विदुः धात्वाशयांतरे धातोर्यः स्वेदस्त्वधिधिष्ठति॥ ति:

देहोष्मणाविपक्वश्च सा कलेत्यभिधीयते ताः सप्त॥ आद्यामांसधरानाम द्वितीया रक्तधारिणी

मेदोधरातृतीयाचचतुर्थीश्लेष्मधारिणी - पंचमीतुमलंधत्ते षष्ठीपित्तधरामता रेतोधरास

प्तमीस्यादितिसप्तकलाः स्मृताः अथ मर्माणि सन्निपातशिरास्नायुसंधिमांसास्थिसंभवः म

र्माणितेषुतिष्ठंति प्राणाः खलु विशेषतः सप्तोत्तरशतंसंति देहे मर्माणि देहिनाम् तान्येकादश

मांसेसु रष्टौ वस्थिषु संति हि संधीनां विंशतिस्तानि स्नायूनां सप्तविंशतिः चत्वारिंशत्त्रयेकं

च शिरामर्माणि नवत्रतु द्वाविंशतिः सक्थियुगे तावत्येव भुजद्वये द्वादशोरसिकक्षेच पृष्ठे

प्रोचतुर्दश ग्रीवायाऊर्ध्वभागेतुसप्तत्रिंशन्मितानि हि मर्माणि हतानि संतिपंचधाभवंतिता

न्याह सद्यः प्राणहराणिस्युर्मर्माण्येकोनविंशतिः मर्मदेशास्त्र यस्त्रिंशत्स्युः कालांतर

28

पार्थिवाः मेदस्यापांमुवस्त्वास्थिरथिवानलतेजसाम् मज्जिशुक्रेचसोमस्यमत्रेऽस्थुशिखिनोर्गुणाः ॥अ
वस्थार्तवेत्वग्नेरस्सेदीरेनयांभसः अथधातूनांमलाः कफः पित्तं मलःस्वेषुप्रस्वेदोनखरोम
च नेत्रविट्चत्वक्स्नेहोधातूनांक्रमशोमलाः नेत्रजिह्वाकपोलानांजलंचरसजंमलम् इत्येके
स्वेषुमलःकर्णादिस्रोतस्सुमलः रसनोदंतकक्षामेढ्रादिमलमपि मेदोमलमित्येके नेत्रविट्
त्वचास्नेहश्चमज्जमलः शुक्रस्यमलमेवनास्तिसहस्रधाध्मातसुवर्णस्येव अथोपधातवः व
नितानांप्रसूतानांधमनीभ्यांस्तनौगतात् रसादेवस्त्रियोजायेतस्तन्येस्तनयुगाशयम् शुद्धमांसस्य
यःस्नेहः सावसापरिकीर्तिता ॥मेदसस्ताप्यमानस्यस्नेहोवाकथितावसा शार्ङ्गधरे॥स्तन्यंरजोव
साःस्वेदोदंताःकेशास्तथैवच ओजश्चसप्तधातूनांक्रमात्सप्तोपधातवः ॥अथाशयः उरोरक्ता
शयस्तस्मादधःश्लेष्माशयःस्मृतः आमाशयस्तनदधस्तल्लिंगंचरकोवदत् तद्यथा नाभिस्त
नांतरंजंतोराहुरामाशयंबुधाः इति आमाशयादधःपक्वाशयाहूर्ध्वंतयाकलाग्रहणीनाम्निका सैव ×२
कपित्ताःपाचकाशयः ऊर्ध्वमग्न्याशयोनाभेर्मध्यभागेव्यवस्थितः तस्योपरितिलंज्ञेयंतदधःप
क्वाशयःपक्वाशयस्तुतदधःसएवतुमलाशयः तदधःकथितोवस्तिःसहमूत्राशयोमतः॥

२५

स्थू ४२    १का ४२    हृ

रुग्दाजनैर्हितैस्तथैव च लोहिताक्षाणि ऊर्वीमूर्ध्वमधो वंक्षणसंधेरूर्ल्लोहिताक्षं तत्र द्वे वा हो ऊर्वीरि
वंतानि चत्वारि शिरामर्माणि एकांगुलानि वैकल्यकराणि तत्र शोणितक्षयेण पक्षाघातः स
क्थिसादो वा आणायः जानुन ऊर्ध्वमुभयोः पार्श्वयोस्त्र्यंगुला एकस्मिन्नजानुनि द्वे अपरस्मिन्
द्वे एवं चतस्रः स्नायुमर्माणि अर्द्धांगुलानि वैकल्यकराणि तत्र शोथाभिवृद्धिः सक्थिस्तंभ
श्च जानुनी जंघोर्वोः संधी संधिमर्मणी त्र्यंगुले वैकल्यकरे तत्र खंजता ऊर्व्यः द्वे ऊर्वी मध्ये
द्वे प्रगंडयोर्मध्ये एवं चतस्रः शिरामर्माणि एकांगुलानि वैकल्यकराणि तत्र शोणितक्ष
यात्सक्थिशोषः कूर्चो पादयोरंगुष्ठांगुल्योर्मध्ये तयोरूर्ध्वमुभयतः एवं चत्वारि मर्माणि वै
कल्यकराणि तत्र पादयोर्भ्रमणवेपने भवतः विटपे द्वे॥ वंक्षणवृषणयोर्मध्ये स्नायुमर्म
णी एकांगुले वैकल्यकरे तत्र षंढत्वमल्पशुक्रता कूर्परो कफोणीतो द्वौ संधिमर्मणी त्र्य
गुलौ वैकल्यकरौ तत्र बाहुमध्ये संकोचः कक्षंदरे नितंवकूपौ द्वौ संधिमर्मणी अर्द्धांगुले

स्नायु

29

णि अर्द्धांगुलानि रुजाभिः कालांतरमारकाणि त्रिप्राणि अंगुष्ठांगुल्योर्मध्ये तत्रहस्त
योर्द्वे पादयोर्द्वे एवं चत्वारि स्नायुमर्माणि अर्द्धांगुलानि आक्षेपकेण कालांतरमारकाणि
इंद्रवस्तयः प्रकोष्ठयोर्मध्ये द्वौ जंघयोर्मध्ये द्वौ एवं चत्वारि मांसमर्माणि अंगुलानि शोणि
तक्षयेण कालांतरमारकाणि बृहत्यौ स्तनमूलाद् उभयतः पृष्ठवंशं यावत् शिरामर्मणी अ
र्द्धांगुले शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैः कालांतरमारके पार्श्वसंधी जंघनपार्श्वयोः स
धी शिरामर्मणी अर्द्धांगुले शोणितपूर्णकोष्ठतया कालांतरमारके कटीकतरुणे त्रिकसंनि
धाने उभयतः श्रोणिकांडे लग्नी कृत्यास्थिनी अस्थिमर्मणी अर्द्धांगुले शोणितक्षयात् पांडुवि
वर्णरूपं कृत्वा कालांतरमारके नितंबौ प्रसिद्धौ द्वौ अस्थिमर्मणी अर्द्धांगुले अधःकायशो
षेण दौर्बल्येन च कालांतरमारके लोहिताक्षाणि जानूर्वी कूर्चविटपकूर्पराः कुकुंदरे क
क्षधरे विधुरे सकृकाटिके अंसांसफलकापांगौ नीले मन्ये फणे तथा वैकल्यकारकाण्या

चतुरंगुलं सद्योमारकम् नाभिः प्रसिद्धा शिरामर्मेदं चतुरंगुलं सद्योमारकं वक्षोमर्माणि सी
मंतास्तलहृदि प्रेंकृवस्तयः बृहत्यौ पार्श्वजो संधीकटीकतरुणे चये नितंबा विते वेतानि
कालां तरहराणि तु वक्षोमर्माणि स्तनमूलस्तनरोहितापलापापस्तंवाः स्तनमूले स्तन
योरधस्तात् द्व्यंगुले यावत् द्विशिरामर्मणी द्व्यंगुले कफपूर्णकोष्ठतया कालांतरमारके॥
स्तनरोहिते स्तनयोरुपरि द्व्यंगुलं यावत् द्वे मांसमर्मणी रक्तपूरितकोष्ठतया कालांतर
मारके अपलापो अंसकूटयोरधस्तात् पार्श्वयोरुपरि द्वे शिरामर्मणी अर्धांगुले रक्तपू
र्णकोष्ठतया कालांतरमारके आपस्तंभौ॥ उरस उभयतो नाड्यौ वातवहे शिरामर्मणी
अर्धांगुले वातपूर्णकोष्ठतया कासश्वासाभ्यां च कालांतरमारके॥ सीमंताः शिरसि पंच
संधयः संधिमर्माणि चतुरंगुलाः उन्मादभयचित्तनाशैः कालांतरमारकाः तलानि॥ मध्यां
गुलिमनुक्रम्य हस्तस्य मध्ये तलम् एवमपरस्य हस्तस्य पादयोश्चत्वारि तलानि मांसमर्मा

32

मारकाः चत्वारिंशच्च चत्वारि वैकल्यं जनयंति हि मर्माष्टकं रुजाकारि विशल्यघ्नं त्रिकं [illegible]
मतम् शृंगाटकान्यधिपतिः शंखौ कंठशिरा गुदम् हृदयं वस्तिनाभ्यौ च सद्योघ्नानि हतानि चे
त् शृंगाटकानि घ्राणश्रोत्रनादि जिह्वासंतर्पकाणां शिरामुखानां शिरसो मध्ये संयोगस्थानम्
तानि चत्वारि शिरामर्माणि चतुरंगुलप्रमाणानि हतानि संति सद्योमारकाणि॥ अधिप
तिः मस्तकस्याभ्यंतरे संधि शिरसोः सन्निपात उपरिष्टाद्रोमावर्त्तः स एकः संधिमर्म ऊर्द्ध्व
मर्द्धांगुलप्रमाणम् शंखौ भ्रुवोरंतोपरि कर्ण ललाटमध्ये तौ द्वौ अस्थिमर्मणी अर्द्धांगुले सद्यो
मारके कंठशिराः मातृकाः ग्रीवाया उभयपार्श्वयोः अष्टनसः अष्टतस्तः शिरास्ताः अष्टौ शिराम
र्माणि चतुरंगुलानि सद्योमारकाणि गुदं प्रसिद्धम् एकं मांसमर्म चतुरंगुलं सद्योमारकम्
हृदयं स्तनयोर्मध्यमामाशयद्वारमेकं शिरामर्म चतुरंगुलं सद्योमारकम् वस्ति॥ नाभि
पृष्ठकटीमध्ये गुदवंक्षणशेफसां मध्ये वस्तिस्तनुत्वक् एक द्वारोऽधोमुखः स्नायुमर्म दं

सद्योमार
कम्×